ये प्राणविधे श्रुतिगे च तुल्ये गुणानुपक्षेण [105] विचिन्तनीये ।
आनन्दविज्ञानघनादि धर्माः ब्रह्मप्रतीतौ नियमेन [106] चिन्त्याः ॥ ४४ ॥

यश्चिन्तनीयः पुरुषः परस्स आत्मा च सर्वेभ्य इति [107] ब्रवीति ।
{ य ऐतरेये श्रुत आत्मशब्दः परस्स आत्मैव [108] परश्रुतौ च ॥ ४५ ॥
छान्दोग्यवाजिस्थसदात्मशब्दौ तुल्याविहेत्यर्थ [108] इति ब्रवीति ।

वासोविधानार्थमनप्नतोक्तिः शुद्ध्यर्थतीर्थे [109] ष्विति चिन्तनीयम् ॥ ४६ ॥

शाण्डिल्यविद्ये च समे गुणोपसंहार एवात्र [110] विधेय इत्थम् ।
स्थानप्रभेदाद्रविरक्षिचेह रव्यक्षिविद्ये च [111] विभिन्न एव ॥ ४७ ॥

यत्संभृतिज्येष्ठगुणादि भानं यत्र श्रुतं [112] तत्र तु नेतरत्र ।
छान्दोग्यगारण्यकपूरुषाख्यविद्ये विभिन्ने [113] गुणभेदसत्वात् ॥ ४८ ॥

सर्वं प्रविध्य प्रभृतीति मन्त्रजातं न विद्याङ्गमिदं [114] परत्र ।
{ पुण्यप्रहाणं यदिह श्रुतं तत्र चोपायनोक्तिश्श्रुति [115] शेषमेव ॥ ४९ ॥
विधूननं चालनबोधकं न किन्तु प्रहाणं त्विति [115] वर्णनं वा ।

देहाद्विनिष्क्रान्तिसमानकाले पुण्यादिहानं [116] सगुणस्थितस्य ॥ ५० ॥

यो देवयानः क्वचिदर्थवान् सः विशुद्ध [117] निष्ठस्य स नेति युक्तः ।
या देवयानाध्वगतिश्श्रुता सा विद्यासु चिन्त्या [118] सगुणासु नित्यम् ॥ ५१ ॥

{ विद्या सुसिद्धौ विदुषश्शरीरनाशे तु [119] कैवल्यसुसिद्धिरेव ।
केषांचिदेवात्र विपश्चितां सा पुनश्शरीराप्तिरिहा [120] धिकारे ॥ (स्थितानामिति-शेषः

या चाक्षरत्वादि निषेधबुद्धिः सर्वत्र [120] विद्यास्वनिवर्तनीया ।
उभौ सुपर्णौ च ऋतं पिबन्ता [121] वित्येतयोरैक्यमिहोच्यते च ॥ ५२ ॥

उषस्तपृच्छा च कहोलपृच्छा तुल्येति विद्यैक्यमिह ब्रवीति[122] ।
त्वं वा अहं सोहमहं त्वमादि चिन्ता विभिन्नश्रुतिगापि तुल्या[123] ॥ ५४ ॥
सत्याद्यविद्ये फलरूपभेदात् भिन्नेत्यतो ध्यानमपीह भिन्नम्[124] ।
चेतो गुहायैक्यमिह श्रुतं तत्र ब्रह्मैव वहं[125] तत एव चैक्यम् ॥ ५५ ॥
भुङ्क्ते यदा ब्रह्मविदत्र चैव प्राणाग्निहोत्रं कुल्लादलोपात्[126] ।
कर्माङ्गयोद्गीथविचिन्तनादि फलान्तरेच्छावत एव[127] सिद्धम् ॥ ५६ ॥

संवर्गवायुश्च परत्रवायुः तुल्योपि भेदेन[128] विचिन्तनीयः ।
मनश्चिदाद्याश्च मनोमयास्ते विद्यात्मका एव न यागशेषाः[129] ॥ ५७ ॥
देहातिरिक्तात्मसमर्थनं[130] च ब्रह्माश्रयाणामनुवृत्तिरेव[131] ।
वैश्वानरात्मा न विशिष्ट एव ध्येयो हि भूमा[132] क्रतुवत्समासः ॥ ५८ ॥

वैश्वानरात्मेन समस्य विद्याः नोपासितव्या विविधा[133] हि विद्याः ।
{ या का च विद्या फलसाधनाय प्रतिगृहीता फलदा तु सैव[134] ॥ ५९ ॥
अतश्च विद्यासु विकल्प एव समुच्चयो नेति निगद्यतेऽत्र[134] ।
काम्यास्तु विद्याश्च यथेच्छमेव[135] कर्माङ्गभूतास्तु यथाश्रयमाम्नाः[136] ॥ ६० ॥
विद्या स्वतन्त्रा फलदेति[137] सिद्धं विद्योपदेशेनास्तु च सिद्ध्यतीति[138] ।
उद्गीथविद्यासु तदस्यतायाः उपासनार्थं स्तुतिगोचरा[139] न ॥ ६१ ॥
वेदान्तसमस्तवाक्याश्च विद्याविधायका एव पारिप्लवा[140] न ।
कर्माग्न्याधानादीननपेक्ष्य विद्या फलं ददातीति जगाद[141] व्यासः ॥ ६२ ॥

शास्त्रीयसर्वाश्रमकर्मसङ्गापेक्षा यथार्हा [142] भवतीह विद्या ।
विद्यावतापीह निषिद्धमन्नं प्राणात्यये स्वल्पफलादि [143] भोज्यम् ॥ ६३ ॥
यज्ञादिकर्माऽऽश्रमिणाऽपि कार्यं विद्यास्थितेनापि [144] सहायसिद्ध्यै ।
द्रव्यादिसंपद्रहितप्रमीतदारादयस्तेष्वपि [145] साऽस्ति विद्या ॥ ६४ ॥
[146] तुर्याश्रमं प्राप्य ततश्च्युतिर्न सा नैष्ठिकस्यापि [147] सततरसमाना ।
ये प्रच्युतास्ते [148] सुबहिष्कृताश्च स्वविकृत्क्रियाप्राश्रयचिन्तना [149] सा ॥ ६५ ॥
विद्यावतो [150] मौनविधिश्च सिद्धः ज्ञानी च दम्भादेर्विवर्जितश्च [151] ।
विद्याफलं स्वैहिकमत्र जन्मन्यमुत्र [152] वाऽप्रस्तुतबन्धके तत्र ॥ ६६ ॥
मुक्त्याह्वयं मेष्टफलं तु विद्यायाश्च न [153] चोत्कर्षनिकर्षकृतम्।
तृतीयकाध्यायगतेषु वस्तु चतुर्दशार्था इह संगृहीताः ॥ ६७ ॥

अथ चतुर्थाध्यायः ॥

ज्ञानस्य [154] चावृत्तिरिहार्थदार्ढ्ये [155] स्तुतामना भापि न च [156] प्रतीकैः ।
अर्कादिषु [157] ब्रह्ममतिर्हि युक्ता मुख्यैरथैकोऽस्त्यद्वितिश्च [158] युक्ता ॥ ६८ ॥
उपासिताऽऽसीन इह [159] प्रकुर्यात् एकाग्रता [160] यत्र स एव देशः ।
शरीरपातावधि [161] चात्मचिन्ता यत्नाद्भवेत् मति [162] पापनाशः ॥ ६९ ॥
पुण्यस्य नाशोऽपि [163] नचैव पाते प्रारब्धकार्यं न [164] हि नश्यतीति ।
नित्याग्निहोत्रादि न नश्यतीह विद्यानुसिद्ध्यै [165] भवतीति चोक्ता ॥ ७० ॥
यत्र ज्ञानरूढं किंचिदं न कर्म [166] क्रिया च मोक्षाय सुखावहं नत्र ।
भोगेन चारब्धमिहानुभूय [167] कैवल्यमाप्नोति विशेषविद्वः ॥ ७१ ॥

प्रयाणकाले सगुणात्मनिष्ठविपश्चितो वाङ्मनसि [168] प्रलीना ।
प्राणे मनश्च [169] प्रविलीयते स प्राणश्च जीवे स च [170] भूतसूक्ष्मे ॥ ७२ ॥

नाडीप्रवेशो विदुषोऽधिकोऽस्ति तत्पूर्वमेकैव [171] गतिर्द्वयोश्च ।
सप्राणजीवस्य लयः परस्मिन् सुषुप्तिकाले च यथा [172] तथाऽत्र ॥ ७३ ॥

विशुद्धविज्ञानपरात्मनिष्ठः नोत्क्रान्तिमाप्नोति [173] परात्मभूतः ।
परात्मवित्प्राणगणः [174] परस्मिन् संलीयते सोऽप्यविभाग [175] एव ॥ ७४ ॥

गुण्यात्मनिष्ठस्य च हार्द एव प्रकाशयत्यत्र च [176] मूर्धनाडीम् ।
उत्क्रान्तविद्वानपि रश्मिसृत्या प्रयाति रात्रावपि [177] रश्मिसत्त्वात् ॥ ७५ ॥

परेऽयनेऽपि प्रसृतो विपश्चित् तां देवयानाख्यसृतिं [178] समेति ।
उपासकस्यार्चिरहर्मुखो[179]ऽध्वा तत्रापि चाब्दात् [180] परमेव वायुः ॥ ७६ ॥

विद्युत्परं [181] तीर्थपतिर्निविष्टः वोढार एतेऽर्चिरहर्मुखा[182]श्च ।
कार्योद्भवं ब्रह्म च ये स्मरन्ति तानेव ते ब्रह्म [183] नयन्ति नान्यम् ॥ ७७ ॥
परं तु यद्ब्रह्म च ये स्मरन्ति तानेव तद्ब्रह्म [183] नयन्ति नान्यम् ।
केचित् प्रतीकव्यतिरिक्तमन्यत् ब्रह्मेति तानेव नयन्ति [184] देवाः ॥ ७८ ॥

स्वेनैव रूपेण परात्मभावः स्वकण्ठचामीकरलाभवत् [185] सः ।
मुक्तः परात्माऽपृथगेव भूतः यत्तत्त्वमस्यादि [186] विशेषविज्ञः ॥ ७९ ॥

ब्राह्मेण रूपेण च केवलेन चैतन्यरूपेण विमुक्त [187] आस्ते ।
मुक्तः स्वसंकल्पत एव सृष्ट्वा भुङ्क्ते च भोगानखिलान् [188] विमुक्तौ ॥ ८० ॥

मुक्तस्य देहेन्द्रियवर्ग आस्ते स पृथग्वेत्यादि च [189] वेदवाक्यात् ।
अनेकदेहाश्रयणेऽपि चात्मा प्रदीपवत्तत्र [190] च तत्र भाति ॥ ८१ ॥
मुक्तौ गुणिब्रह्मविचिन्तकस्य सृष्ट्यादिवर्जं परमात्मसाम्यम् [191] ।
चतुर्थकाध्यायगतेषु फल्गु चतुर्षु चार्था इह संगृहीताः ॥ ८२ ॥
व्यासोदिताध्यायचतुष्टयेषु श्रीशंकराचार्यगुरूपदिष्टाः ।
ये सूत्रभाष्ये प्रतिभान्ति तेऽर्थाः रङ्गार्यनाम्ना विदुषा गृहीताः ॥ ८३ ॥

सगुणब्रह्मनिष्ठस्य सृष्टिवर्जं स्वसाम्यता ।
शुद्धब्रह्मणि निष्ठस्य भवेन्नैवेयं फलमच्युते ॥ ८४ ॥
भाष्येऽधिकरणानां च संख्यैकनवतिशतम् ।
सूत्रसंख्या पञ्चपञ्चाशत्पञ्चशतानि ॥ ८५ ॥
(अधिकरणानि १९१ सूत्राणि ५५५)

इति काञ्चि. वल्लीपुरे, मतत्रयनिरूपक-रङ्गाचार्याणां कृतिषु
श्रीशङ्कर-मूलभाष्याधिकरणार्थसंग्रहः ॥
शुभं भूयात् ॥

---

(श्लोकमध्यगता संख्या अधिकरणसंख्याज्ञापिका)

॥ श्रीः ॥

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

# मतत्रय सारसंग्रहे
# श्रीभाष्याधिकरणार्थ संग्रहः

## विशिष्टाद्वैतं ॥

श्रीनृसिंहपदांभोजसमाराधनतत्परम् ।
श्रीरङ्गशठकोपाख्ययतिराजगुरुम् भजे ॥
अहोबिलमठाधीश श्रीनिवासयतीश्वरम् ।
नत्वाऽण्णावाजपेयादीन् समहो लिख्यतेऽधुना ॥ १ ॥
श्रीभाष्यस्याधिकरणनिर्णीतार्थप्रकाशकः ।
अपर्याप्तामृतब्रह्मस्तवोयं लिख्यते मया ॥ २ ॥
सूत्रसंख्या पञ्चचत्वारिंशत्पञ्चशतानि च ।
संख्याधिकरणानां तु षट्पञ्चाशच्छतं तथा ॥ ३ ॥

सूत्राणि ५४५; अधिकरणानि—१५६

## प्रथमाध्यायः ।

गुरूपसत्तिं प्रविधाय भक्त्या ब्रह्मोपदिष्टं गुरुणा [1] शृणोतु ।
सर्गादिकर्ता [2] जगतस्त्वमेव [3] शास्त्रैकमानं [4] पुरुषार्थरूपी ॥ ४ ॥
[5] त्वं न प्रधानं [6] श्रुतिवागतीतानन्दस्वरूपीति च कथ्यतेऽस्मिन् ।
आदित्यमध्ये [redacted] [7] हिरण्मयोसि [8] ह्याकाशवाच्योऽ[9]सुशब्दवाच्यः ॥ ५ ॥

(श्लोकमध्यगता संख्या अधिकरणसंख्या ज्ञापिका)

मुक्तस्य देहेन्द्रियवर्गं आस्ते स एकधेत्यादि च [189] वेदवाक्यात् ।
अनेक देहाश्रयणेऽपि चात्मा प्रदीपवत्तत्र च [190] तत्र भाति ॥ ८१ ॥
मुक्तौ गुणिब्रह्मविचिन्तकस्य सृष्ट्यादिवर्जं [191] परमात्मसाम्यम् ।
चतुर्थकाध्यायगतेषु पत्सु चतुर्षु चार्था इह संगृहीताः ॥ ८२ ॥
व्यासोदिताध्याय चतुष्टयेषु श्रीशंकराचार्यगुरूपदिष्टाः ।
ये सूत्रभाष्ये प्रतिभान्ति तेऽर्थाः रङ्गार्यनाम्ना विदुषा गृहीताः ॥ ८३ ॥

सगुणब्रह्मनिष्ठस्य सृष्टिवर्जं स्वसाम्यता ।
शुद्धब्रह्मणि निष्ठस्य स्वेनैक्यं फलमच्युते ॥ ८४ ॥
भाष्येऽधिकरणानां च संख्यैकनवतिश्शतम् ।
सूत्रसंख्या पञ्चपञ्चाशच्चपञ्चशतानि ॥ ८५ ॥
(अधिकरणानि १९१ सूत्राणि ५५५)

इति कालि. वल्लीपुरं, मतत्रयनिरूपक-रङ्गाचार्याणां कृतिषु
श्रीशङ्कर-सूत्रभाष्याधिकरणार्थसंग्रहः ॥
शुभं भूयात् ॥

---

(श्लोकमध्यगता संख्या अधिकरणसंख्याज्ञापिका)

॥ श्रीः ॥

श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

# मतत्रय सारसंग्रहे
# श्रीभाष्याधिकरणार्थ संग्रहः

---

## विशिष्टाद्वैतं ॥

---

श्रीनृसिंहपदांभोजसमाराधनतत्परम् ।
श्रीरङ्गशठकोपाख्ययतिराजगुरुम् भजे ॥

अहोबिलमठाधीश श्रीनिवासयतीश्वरम् ।
नत्वाऽप्पायाजपेयादीन् संग्रहो लिख्यतेऽधुना ॥ १ ॥

श्रीभाष्यस्याधिकरणनिर्णीतार्थप्रकाशक ।
अपर्याप्तामृतब्रह्मतत्त्वबोधं लिख्यते मया ॥ २ ॥

सूत्रसंख्या पञ्चचत्वारिंशत्पञ्चशतानि च ।
संख्याधिकरणानां तु षट्पञ्चाशच्छतं तथा ॥ ३ ॥

सूत्राणि ५४५; अधिकरणानि—१५६

ज्योतिः परं भासि [10]दिवः परं च [11]शचीपतिप्राणपदाभिधेयः ।
ब्रह्मेति सर्वं [12]वदति श्रुतिस्सा [13]चराचरात्ताऽक्षिणि [14]पूरुषश्च ॥ ६ ॥
भूरादि सर्वेषु [15]वितिष्ठसेऽन्तर्यामी ह्यदृश्यादि [16]गुणार्णवश्च ।
[17]वैश्वानरात्मा [18]द्युस्वान्तरिक्षप्राणादि वेश्मापि [19]चक्राधि भूमा ॥ ७ ॥
[20]किञ्चाक्षराख्यः [21]परपूरुषश्च [22]दहरान्तराकाशपदाभिधेयः ।
[23]अङ्गुष्ठमात्रः पुरुषः परात्मा [24]देवाद्युपास्यो[25]प्यवसुस्ततोसि ॥ ८ ॥
[26]शूद्रानुपास्योऽभिमुखाऽमराश्च त्वत्तस्तु बिभ्यत्य[23a]निशं च सर्वे ।
त्वं रूपनाम्नोर्जगतः प्रवोढा आकाशशब्देन च [27]विश्रुतोसि ॥ ९ ॥
अव्यक्तशब्दप्रतिपादितोसि न [28]सांख्यनिष्ठस्य विमुक्तिदश्च ।
त्वदात्मिकाजां च न वेत्ति सांख्यः आपाततो [29]वेदविचारवादी ॥ १० ॥
पञ्चेति संख्याश्रयणेपि 'यस्मिन् [30]पञ्चे'तिवाक्ये च भवान् विभाति ।
सृष्ट्यादिवाक्ये बहुधापि भिन्ने त्वत्कारणत्वे [31]न विवाद एव ॥ ११ ॥
अजातशत्रुश्च भवन्तमाह ब्रह्मेतिवेद्यं [32]जगतो निदानम् ।
'न वा अरे पत्युरि'ति श्रुतौ यः [33]आत्मेतिशब्दस्त्वयि मुख्यवृत्तः ॥ १२ ॥
सर्वप्रपञ्चस्य भवन्तमेव निमित्तमाहुः [34]प्रकृतिं च वेदाः ।
सर्वागमान्ताश्च भवन्तमेव व्याख्यान्ति शिष्टा [35]अपि पूर्वरीत्या ॥ १३ ॥
उपक्रमाध्यायगतेषु पत्सु चतुर्षु भाष्यार्थविचार एषः ।

## अथ द्वितीयाध्यायः ।

---

मन्वादि [36]साधुस्मृतिदृष्टरूपः [37]योगोक्त्यगम्यश्च [38]विलक्षणस्त्वम् ॥ १४ ॥

[39]बाह्योरदृष्टश्च [40]परात्मजीवविभागवान् [41]कारणकार्यरूपः ।
हिताद्[42]दिकार्याकरणादिदोषशून्यश्च [43]सामग्र्यनपेक्षसृष्टिः ॥ १५ ॥
कृत्स्न[44]प्रसक्त्यादि समस्तदोषहीनश्च [45]लीलाफलसृष्टिकर्ता ।
सामर्थ्यवान् त्वं [46]रचनाविशेषे पराणुहेत्वादि [47]निरासकोऽसि ॥ १६ ॥
क्षित्यम्बुतेजोऽनिलसंहती द्वे जगन्निदानं त्विति [48]वादिभेत्ता ।
ज्ञानातिरिक्तार्थपदार्थसत्ता नास्तीति [49]दुर्वादिमतादिवज्रः ॥ १७ ॥
शून्यादि[50]वादप्रतिषेधकस्त्वं [51]विरुद्धधर्माश्रयवादिविद्विट् ।
शैवागमो[52]क्तार्थनिरासदक्षः त्वं [53]पञ्चरात्रागमप्रमाणवादी ॥ १८ ॥
वियत्[54]समीरप्रभवस्त्वमेव तेजोऽम्पृथिव्यादि [55]पिता त्वमेव ।
जीवात्[56]मनित्यत्वविबोधकस्त्वं [57]ज्ञानाणुधर्मोऽयमिति ब्रवीषि ॥ १९ ॥
[58]कर्ताऽपरमात्मेति च संब्रवीषि [59]त्वद्दत्तकर्तृत्ववहीति जीवः ।
जीवाश्च [60]सर्वे भवदंशभूताः त्वमिन्द्रियाणां [61]जनकोऽखिलानाम् ॥ २० ॥
एकादशानामपि [62]चेन्द्रियाणां [63]प्राणानणूनेव करोषि सर्वान् ।
वायु[64]प्रपञ्चसम्बन्धात् पृथक् न तं [65]वायुमेवाणुमिदं ब्रवीषि ॥ २१ ॥
गरुद्गतं [66]ज्योतिरधिष्ठितृत्वं श्रेष्ठातिरिक्ता[67]नि त इन्द्रियाणि ।
त्वयैर सृष्टे अपि नामरूपे त्रिवृत्कृ[68]तारः पृथिवी च तेजः ।
द्वितीयकस्याध्यायगतार्थ एषः कुर्वन बोधाय मया गृहीतः ॥ २२ ॥

अथ तृतीयाध्यायः ॥

---

तिष्ठन् स स्वादौ चिरकालमेति[73] व्रीह्यादि संश्लिष्ट[74] इहावरोहेत ।
स्वप्ने पदार्था भगवद्विसृष्टाः[75] जीवस्य सुप्तिः[76] परमात्मनीति ॥ २४ ॥
सुप्तप्रबुद्धः स हि जीव एव[77] मूर्च्छा मृतेरर्धदशा[78] समाना ।
सदा च सर्वत्रगतः परात्मा निर्दोषकल्याणगुणाकरस्सः[79] ॥ २५ ॥
ब्रह्मस्वरूपं त्वचिदित्यशेषवत् ब्रह्मापृथग्भावत[80] एव तद्धि ।
सेत्वर्थकश्चापि परस्य आत्मा[81] फलप्रदस्तत्तनुरेव विष्णुः[82] ॥ २६ ॥
कृत्स्नागमान्तोत्थमुपासनं तत् एकं ततस्तत्र गुणानुषङ्गः[83] ।
उद्गीथविद्ये स्वविभेदहेतुसत्वाद्धि भिन्ने इति[84] निश्चिते द्वे ॥ २७ ॥
ये प्राणविद्ये च तयोरभेदः[85] आनन्दसत्त्वादि गुणानि[86] चिन्त्यः ।
प्राणस्य वासस्त्वविधानमप्सु[87] शाण्डिल्यविद्यैरयनभेददृष्टेः[88] ॥ २८ ॥
स्थानादिभेदात् रवि-नेत्रविद्ये[89] भिन्ने च भूम्यादि[90] च यत्र तत्र ।
'तस्यैवमि'त्यादि यजुर्गता या छान्दोग्यगायाः पृथगेव[91] विद्या ॥ २९ ॥
'विध्यादि'मन्त्राभिचारदोषाः[92] उपायनार्थी न विहातिरत्र[93] ।
देहादपक्रान्ति समानकाले निःशेषकर्मक्षय उच्यतेऽत्र[94] ॥ ३० ॥
ये ब्रह्मविद्याधिकृतास्तु तेषां तुल्यार्चिरादिर्गतिरित्यधीना[95] ।
अस्थूलतादैश्च गुणैर्विशिष्टं ब्रह्मानुचिन्त्यं[96] त्विति चोक्तमत्र ॥ ३१ ॥
उषस्तविद्या च कहोलविद्या तुल्यैव[97] विद्ये दहराख्यके द्वे[98] ।
उद्गीथचिन्तानियमो[99] न चात्र दहरस्य चिन्ता गुणचिन्तनार्था[100] ॥ ३२ ॥

## अथ चतुर्थाध्यायः ॥

[124] आवृत्तविज्ञानमिहात्मलाभे स्वात्मान्तराप्नोति च [125] तस्य चिन्ता ।
नामाद्युपास्तौ न [126] परात्मलाभः उद्गीथकेऽर्कादि [127] विचिन्तनीयम् ॥ ४२ ॥
उपासना चासननिष्ठितस्य मनोनुकूले [128] भवतीह देशे ।
आवृत्तविज्ञानमपीह यावत् शरीरपातं [129] करणीयमेव ॥ ४३ ॥
उपासनोपक्रम एव पापप्रहाणमुक्तं [130] सुधियामिहेति ।
[131] शरीरपातेऽखिलपुण्यनाशोऽप्यारब्धकार्ये तु [132] विनश्यतो द्वे ॥ ४४ ॥
नित्याग्निहोत्रादि तु कार्यमेव विद्यासमाप्त्यै [133] विदुषां स्वकर्म ।
आरब्धकार्ये सुकृतं च पापं फलानुभूत्यैव [134] निरस्यमत ॥ ४५ ॥
वागिन्द्रियं चेतसि [135] युज्यतेऽत्र प्राणे [136] मनस्सोपि [137] च जीव एव ।
जीवेन युक्तस्य च [138] भूतसूक्ष्मे ह्युत्क्रान्तिरेषा [139] सदसत्समाना ॥ ४६ ॥
सप्राणजीवस्य परात्मसङ्गः स्वविश्रमायेति [140] निगद्यतेऽत्र ।
परात्मसङ्गो [141] ह्यविभागरूपः मूर्धन्यनाड्योत्क्रमणं [142] बुधानाम् ॥ ४७ ॥
निष्क्रान्तविद्वानपि सूर्यरश्मिद्वारैव चाप्नोति [143] परात्मलोकम् ।
रात्रावपीनस्य च [144] रश्मिसत्वा मृतस्सुर्परित्ययने [145] परे *वत ॥ ४८ ॥
एकाध्वनार्चि[146]र्दिवसादिनैति विद्वानथाब्दात् [147] परमेति वायुम् ।
जलाधिनाथं [148] तटितः परं च वोढार एतेऽर्चिरहर्मुखास्ते [149] ॥ ४९ ॥

---

*(वत=प्रवेव)

ब्रह्मात्मकं स्वं प्रकृतेर्वियुक्तं ब्रह्माप्युपास्ते च नयन्ति ते तम् ।
योऽसावुपास्ते परमेव कार्यं न तान्नयन्तीति वदत्यमुष्मिन्[150] ॥ ५० ॥

तिरोहितं यन्निजरूपमस्ति तदेव चाविर्भवतीह मुक्तौ[151] ।
सर्वांश्च कामानविभक्त एव समश्नुते मोक्ष इति प्रकल्प्तम्[152] ॥ ५१ ॥
श्रुतौ य आत्मेति गुणाष्टकं सत् तद्युक्त आत्मा प्रतिभाति[153] मुक्तौ ।
परात्मसंकल्पविमिश्रनैजसंकल्पलब्धस्वष्टपदार्थभोगः[154] ॥ ५२ ॥
मुक्तस्य तन्वादिकमस्ति तच्च त्रिधा चतुर्धा नवधेत्यनेकम्[155] ।
जगत्प्रतित्वादि विसृज्य साम्यं परात्मभोगे प्रतिपाद्यतेऽत्र[156] ।
चतुर्षु पादेषु तुरीयगेषु विचारितार्था इह संगृहीताः ॥ ५३ ॥
श्रीभाष्यतात्पर्यसुसंग्रहोऽयं सुखेन बोधाय सुपण्डितानां ।
रङ्गार्यनाम्ना लिखितो बुधेन जयत्वसौ संसदि पण्डितानाम् ॥ ५४ ॥
इत्थं चतुर्भिरध्यायैः व्याससूत्रार्थबोधकैः ।
श्रीभाष्योक्तार्थसहितैः स्तुतरङ्गाङ्घ्रिन् प्रसीद मे ॥ ५५ ॥
वेदव्यासमहर्षिणा विरचितं यद्ब्रह्मसूत्रात्मकम्
तद्व्याख्यां लिलिखुश्च पूर्वगुरवः तात्पर्यविज्ञाश्च यद् ।
तेऽमी यादवभास्करौ प्रथमजौ श्रीशंकराचार्यकः
मध्वार्यो यतिराजलक्ष्मणमुनिः श्रीनीलकण्ठाह्वयन् ॥ ५६ ॥
तद्ग्रन्थाभ्याससंप्राप्तस्वल्पज्ञानोऽप्यहं मुदा ।
भाष्यतत्त्वार्थं संगृह्य प्रालिखं सुधियां मुदे ॥ ५७ ॥

इति काञ्चि, नगरीपुरं, रङ्गाचार्येणां कृतिषु
श्रीभाष्याधिकरणार्थसंग्रहः संपूर्णः ॥
शुभं भूयात्

---

॥ श्रीः ॥

# मतत्रय सारसंग्रहे
# द्वैतभाष्याधिकरणार्थ संग्रहः

---

## द्वैतम्
### प्रथमाध्यायः ॥

---

लक्ष्म्याऽऽश्लिष्टं *क्ष्माभिमानिदेवं मध्वार्यसद्गुरुम् ।

नत्वा भाष्याधिकरणसंग्रहोयं विलिख्यते ॥ १ ॥

ओं

विष्णुर्जिज्ञास्य उक्तः[1] स च सकलपिता[2] सोपि शास्त्रैकगम्यः[3]

तस्मिन् वेदान्वयात्[4] सः श्रुतिगतपदवाच्यस्स एवेक्षणीयः[5] ।

अभ्यासाद्विष्णुरानन्दमय[6] उदधिशायीति[7] चाकाशवाच्यः[8]

लिङ्गात् प्राणश्च[9] विष्णुः त्रिचरणकथनात् ज्योतिरप्याह विष्णुम्[10] ॥ २ ॥

छन्दस्स्वरूपोयमिति[11] ब्रवीति ज्योतिर्हरिः प्राणपदाभिधेयः[12] ।

ब्रह्मेति[13] सर्वत्र परात्मरूढः चराचरात्ता च स एव विष्णुः[14] ॥ ३ ॥

गुहां प्रविष्टौ हरिरेव रूपद्वयेन तस्थौ[15] नयनान्तरश्च[16] ।

व्याप्यन्तरस्थोपि स[17] विष्णुरेव अदृश्यधर्मादिगुणोपि विष्णुः[18] ॥ ४ ॥

---

*लक्ष्मीनृसिंह इत्यर्थः ।

श्लोकमध्यगता संख्या अधिकरणसंख्याज्ञापिका

वैश्वानरात्मापि च विष्णुरेव[19] द्युभ्वादि वेश्मापि ॥ विष्णुरेव[20] ।
भूमापि विष्णुस्सुमुखस्वरूपः[21] सान्तस्य धृत्याऽक्षरवाच्य[22] एषः ॥ ५ ॥
सच्छब्दवाच्यो हरिरैक्षतेति कर्माभिधानात्[23] दहरोऽपि विष्णुः[24] ।
ज्ञानार्थिना प्रार्थितवस्तु विष्णुः तस्यानुकृत्या हि विभाति[25] सर्वम् ॥ ६ ॥
ईशानशब्दप्रमितोपि विष्णुः अनन्तरं वामनशब्दसत्त्वात्[26] ।
विद्याधिकारोस्ति हि देवतानां मध्वादिविद्यास्वधिकारभावः[27] ॥ ७ ॥
पैङ्गायणः क्षत्रिय एव तस्मात् शूद्रस्य विद्याधिकृतिर्न चास्य[28] ।
यस्माज्जगच्चेजति येन वज्रं समुद्धृतं सोपि च विष्णुरेव[29] ॥ ८ ॥
हृद्यन्तरज्योतिरपीह विष्णुः[30] आकाशवाच्यस्स भिदोपदेशात्[31] ।
स्वप्नादि कर्ता स च विष्णुरेव प्राज्ञेन सङ्गाच्च भिदोपदेशात्[32] ॥ ९ ॥
श्रुतिश्रुतब्राह्मणशब्दवाच्यः पत्यादिशब्दात् स च विष्णुरेव[33] ।
योऽव्यक्तशब्दादिरिह श्रुतिस्थः तदन्तरात्मानममुं[34] ब्रवीति ॥ १० ॥
ज्योतिःपदं कर्मविधायकं तत् उपक्रमाद्विष्णुमिह[35] ब्रवीति ।
पञ्चेऽपि संख्याश्रयणेऽपि पञ्चजनाश्श्रुतिस्था हरिमाहुरेवम्[36] ॥ ११ ॥
यःकारणं कार्यमपीह दृष्टं आकाशशब्दादिषु विष्णुरेव[37] ।
{ लोकस्यवेदस्यसमस्तशब्दाः विष्णुं समाहुः प्रथमं परम्[38] ॥ १२ ॥
{ आकृष्य योगेन च तत्तदर्थबोधे सुशक्ता इति युक्तमत्र[39] ।
प्रकृत्यदित्यादिपदाभिधेयः विष्णुः प्रतिज्ञाद्यनुकूललिङ्गात्[39] ॥ १३ ॥
{ श्रुतिस्थशून्यादि पदानि योगात् विष्णुं ब्रुवन्त्येव तथेतरे[40]ऽपि ।
{ व्याख्यातरीत्यैव सुवेदितव्याः विष्ण्वर्थका एव सुनिर्णयोऽत्र[40] ॥ १४ ॥

## अथ द्वितीयाध्यायः ॥

विष्ण्वादिनोक्तास्स्मृतयः प्रमाणं रुद्रादिनोक्ता न [41] फलायदृष्टेः ।
वेदास्तथा भारतपञ्चरात्र-मूलाख्यरामायणमुख्य[41]शास्त्रम् ॥ १५ ॥
न तेषु दोषाः परिकल्पनीयाः नित्यास्त्वतो मानमिति [42] प्रसिद्धम् ।
विष्णुप्रदत्ताखिलशक्तयस्ताः मृदादिवस्तुष्वभि[43]मानिदेवाः ॥ १६ ॥
असज्जगद्बीजमिति श्रुतिश्च ब्रह्मैव चासत्पद[44]मित्यवेहि ।
जले जलं सिक्तमपीह वृद्धिः यथा पराप्तावपि [45] जीवभेदः ॥ १७ ॥
विष्णुस्स्वतन्त्रो न परानपेक्ष्य सृजत्यसौ 'किं स्विदि'ति [46] श्रुतेश्च ।
जीवस्य कर्तृत्वमयुक्तमेव सर्वत्र शक्तस्स हि [47] विष्णुरेव ॥ १८ ॥
स्वतन्त्रविष्णौ श्रुतिसिद्धशक्तौ न लोकयुक्त्यादि [48] विवक्तुमर्हेम् ।
प्रयोजनार्थी न च सृष्टिरस्य मत्तस्य नृत्यादिरिवेह् [49] लीला ॥ १९ ॥
वैषम्यनैर्घृण्यविमुक्त एषः कर्माद्यपेक्ष्यैव [50] फलप्रदाता ।
श्रुतौ च लोके च विरुद्धरूपा धर्मा हरौ युक्ततया [51] विभान्ति ॥ २० ॥
प्रधानमेतज्जगतो न कर्तृ विष्णुं विना कस्य च नास्ति [52] शक्तिः ।
ब्रह्मस्थितं ब्रह्मविलीनमेतत् नान्यत्र तत्सेश्वरको [53] निरस्तः ॥ २१ ॥
धर्मादिको नास्ति च यन्मते सः चार्वाकपक्षस्तु[54]निरस्त एव ।
देहस्य चाश्मा नयनादिकं तु विष्णुं विना नेति च [55] पूर्वमुक्तम् ॥ २२ ॥
शरीरसङ्घात पुरुषप्रवृत्तिः स्वशक्त्यभावेन न युक्त [56] एव ।
कार्यं महत्त्वादिति युक्तिवादी स तार्किको दूरतरं [57] निरस्तः ॥ २३ ॥

पाण्डुपुत्रो जगतो निदानमित्येषवादोऽपि निरस्त[58] एव ।
न शून्यवादश्च कदापि सिद्ध्येदस्य शब्दो हरिमेव[59] वक्ति ॥ २४ ॥
विज्ञानमात्रं क्षणिकं च आह सर्वप्रकारेण बहिष्कृत[60]स्सः ।
सत् स्यादसत् स्यात् सदसच्च न स्यादित्यादि वादी च निरस्त[61] एवः ॥ २५ ॥
पशुपतेः सर्वविरुद्धमेतत् उमश्च रुद्रः परतन्त्र[62] एव ।
शक्तिश्च काचित् जगति प्रसिद्धा सा देवता विष्णुमृते[63] न शक्ता ॥ २६ ॥
वियता[64] जन्मादिविदेव वायुस्तथैव[65] नो जन्म ततस्तु शास्त्रे[66] ।
तेजः परस्मात् अनिमस्तु[67] तत्र आपः परस्माज्जनिमाप्नुवन्ति[68] ॥ २७ ॥
'ता अश्नमि'त्यत्र च भूमि[69]रुक्ता हर्ता न रुद्रस्य[70] च विष्णुरेव ।
खादेर्जनिर्या तु विपर्ययेण लयक्रमस्तस्य विवक्षितो[71]ऽत्र ॥ २८ ॥
विज्ञानतत्त्वात् मनसश्च[72] सृष्टिः विष्णुर्न कुत्रापि विलीयते[73] सः ।
जीवाश्च विष्णोर्जनिमाप्नुवन्ति श्रुतेश्च युक्तेरुपपत्तिसत्त्वात्[74] ॥ २९ ॥
उत्क्रान्तिगत्यागति[75]मानणुस्सः अंशश्च विष्णोस्सुमनन्य[76]वश्च ।
जीवः परश्चापि विभिन्न एव तत्त्वं श्रुतिर्ब्रह्म[77]समाधिकेति ॥ ३० ॥
आद्यन्तशून्यो हि यथा परात्मा जीवात्मथैवेति न दोष[78]लेशः ।
आनन्दरूपोऽपि च जीव एषः पुंस्त्वादिवत् व्यज्यत एव काले[79] ॥ ३१ ॥
शास्त्रार्थवत्त्वाय विहारतादेः जीवोऽपि कर्ता हरि[80]निघ्न एव ।
विष्णोश्च जीवा पृथगंशभूताः कन्यादियुक्ता इति शास्त्र[81]माह ॥ ३२ ॥
अनादिकर्मादिविचित्रभावात् परस्परं जीवसुखादि चित्रम्[82] ।
प्राणाश्च जन्मादि भजन्त[83] एव मनस्तथा[84] वाक् च मनः प्रजाताः[85] ॥ ३३ ॥

प्राणस्तथा[86] द्वादश[87] चाणवश्च श्रेष्ठस्तथा विष्णुज एव मुख्यः[88] ।
प्राणश्च मुख्यो हरिरिनिघ्न एव नेत्रादिवत् सृष्टिरपीह गीता[89] ॥ ३४ ॥
यथा मनोवृत्तिवशाद्विभिन्नं प्राणोप्ययं पञ्चविधो विभिन्नः[90] ।
अणुश्च मुख्यः करणानि जीवसहायभूतानि हरौ स्थितानि[91] ॥ ३५ ॥
श्रेष्ठातिरिक्तानि त इन्द्रियाणि ते द्वादशैवेति विनिश्चितानि[92] ।
नामानि रूपाणि च विष्णुरेव त्रिवृत्कृतानीह सृजत्यजो न[93] ॥ ३६ ॥
मांसादि भौमं न तु सर्वमङ्गं अप्तेजसोरंशमवेहि तत्त्व[94] ।
त्रिवृत्कृतं सर्वमथापि विद्यात् भू-तोय-तेजांसि विशेषहेतु[95]
द्वितीयकाध्यायगतेषु पत्सु चतुर्षु चार्था इह संगृहीताः ॥ ३७ ॥

अथ तृतीयाध्यायः ॥

जीवोन्यदेहंमति याति भूतैः सूक्ष्मैः परिष्वक्त इति ब्रवीति[96] ।
त्रिवृत्कृतेप्यत्र जलाधिक्यात न चाद्भिरेतीति[97] निगद्यतेऽस्मिन् ॥ ३८ ॥
प्राणैश्च साकं स हि गच्छतीति[98] यातं न भागेन च जीवमेति[99] ।
श्रद्धाख्यहोमो जलहोम[100] एव यागादिकृत् गच्छति भूतसूक्ष्मैः[101] ॥ ३९ ॥
'अपामसोमं'त्विति वेदवाक् च नात्मक्षमाहेति च मात्कसूत्रम्[102] ।
कर्मक्षये सत्यपि भुक्तशिष्टकर्मी पुनर्जीव इहेत्यवादीत[103] ॥ ४० ॥
यथा प्रयातः पुनरेति भूमिं तथाऽन्यया चापि पथेति[104] वक्ति ।
पुनर्जनिप्राप्तिनिदानकर्माऽऽचारश्रुतिस्तत्प्रतिबोधनाय[105] ॥ ४१ ॥
यज्ञाद्यकर्तुः गतिरागतिस्स्यात कृतान्तवश्यस्य च सोपपन्ना[106] ।
यमाज्ञया सप्त च रौरवादीन् यागाद्यकर्ता[107] लभते च दुःखम् ॥ ४२ ॥

मोक्षेप्युपासा भवतीच्छयैव[152] कर्मापि कुर्वन्ति निजेच्छयैव[153] ।
ये ब्रह्मनिष्ठा स इमे विमुक्त[154] आनन्दभाजोपि यथाधिकारम्[155] ॥ ६२ ॥
प्राणाह्वयाऽजात् पर उत्तमो हि विष्णुः प्रसिद्धश्श्रुतिषूपदिष्टः[156] ।
य उत्तमो मानवदेवसंघात् प्राणो विमुक्तौ हरिरेव तस्मात्[157] ॥ ६३ ॥
ये भूमविद्यागतसत्यमुख्याः ब्रह्मस्वरूपान्तरगा[158] गुणास्ते ।
लक्ष्म्याः कदाचिन्न जनिर्भवाब्धौ स्वेच्छावशात् भूमिगतास्त्वनुवर्ती[159] ॥ ६४ ॥
यद्ब्रह्मविज्ञानमिहोपदिष्टं तद्वेदतात्पर्यबहिर्गतं[160] तु ।
प्रसादपूर्वं गुरुदत्तमेव ज्ञानं फलि स्यादिति निर्णयोत्र[161] ॥ ६५ ॥
स्वीयप्रयत्नाच्च गुरुप्रसादः श्रुतौ बलीयानिति सम्यगुक्तम्[162] ।
श्रोतव्य आत्मा गुरुवर्यपादशुश्रूषया चासकृदित्यतश्च[163] ॥ ६६ ॥
विद्यैव हेतुः परमात्मलाभे विद्यापरोक्षाधिषणा[164] च गीता ।
ज्ञानं परं मोक्षनिदानमत्र तमेवमित्यागमशास्त्रयुक्तेः[165] ॥ ६७ ॥
गुरुप्रसादश्रवणादि यद्वत् भक्तिश्शमाद्याश्च[166] निदानभूताः ।
उपासनाभेदवदेव विष्णोः दृष्टिप्रभेदोपि विमुक्तिहेतुः[167] ॥ ६८ ॥
सामान्यदृष्ट्या न विमुक्तिसिद्धिः योग्यात्मदृष्ट्या भवतीतिसूक्ता[168] ।
विशेषभक्त्याऽस्य ■ विष्णुरेव ज्ञानं प्रदायाथ ददाति मुक्तिम्[169] ॥ ६९ ॥
ज्ञानादि भेदेऽपि न भेद इष्टः अंशांशिनोरिन्दिरीरिक्त[170] सः ।
ब्रह्मादि देवैस्सहितास्ति विद्या तत्राप्युपासाकरणे न दोषः[171] ॥ ७० ॥

सर्वाङ्गजुष्टः क्रतुरेव *चोद्घः तथा हरिर्भूमगुणो विचिन्त्यः[172] ।
भूमापि नानैव चचिन्त्य इष्टः शब्दानुमाक्षादिविभेददृष्टेः[173] ॥ ७१ ॥
*उद्घः=श्रेष्ठः

स्वयोग्यमुक्त्यर्थमुपासनायां पापादिनाशाय तदन्यचिन्ता[174] ।
फलान्तरार्थी च हरिं विचिन्त्यादकाममेवात्र मुमुक्षुरुक्तः[175] ॥ ७२ ॥
ये चाङ्गदेवा रविवह्निमुख्याः ते चाप्युपास्या इह मुक्तिकामैः[176] ।
विमुक्त्युपासासहभावशून्यात् न ते* विचिन्त्या इति वक्तिसूत्रं[177] ॥ ७३ ॥
आनन्द आत्मा स च सत्यरूपः ज्ञानस्वरूपस्स इतीह चिन्त्यः[177] ।
तृतीयपादेऽत्र मया गृहीताः एते बुधानां हृदि भान्तु नित्यम् ॥ ७४ ॥
यद्ब्रह्मविज्ञानमदस्तु सर्वं फलप्रदं कर्म ततोधिकं[178] तु ।
वेदेषु निष्णातमतिर्गुरौ च सुभक्तियुक्तो हरिचिन्तकोसौ[179] ॥ ७५ ॥
नरर्षिदेवेषु च तारतम्यज्ञानाधिकास्तेष्वधिकारिभेदः[180] ।
ये ब्रह्मनिष्ठा विविधेषु तेषुं मौनं शमाद्याचरणं क्रियायाः[181] ॥ ७६ ॥
ब्रह्माप्त्यपेक्षा सकलेषु विद्यात् तदर्हजीवेषु तु तस्य सिद्धिः[182]
ब्रह्माप्तिकामोपि कदापि विष्णोरैश्वर्यकामी न भवेदिहेति[183] ।
देवर्षिगन्धर्वपदातिरिक्तफलाभिलाषी न पतेदिहेति[183] ॥ ॥ ७७ ॥
कर्मादि कुर्वन्ति च ये तु विप्राः तेभ्यःफलं ज्ञानिसुरा दिशन्ति[184] ।
मुक्तिर्गृहस्थस्य भवेदिहेति ब्रवीति देवान् गृहिणो नरान्न[185] ॥ ७८ ॥

* ते=अङ्गदेवताः ।

ज्योतिःपरं यच्छ्रुतमत्र तद्धि हरिः[215] परात्मेत्यवदन्महर्षिः ।
मुक्तःपरं प्राप्य बहिश्च भोगान् परात्मना साकमथैष भुंक्ते[216] ॥ ८७ ॥
मुक्तौ हरेर्देहमनुप्रविश्य प्रभुञ्जतेऽन्तर्बहिरेव भोगान्[217] ।
यत्नानपेक्षाः[218] परिभुञ्जते ते मुक्तोह्यनन्याधिपतिर्भवेत्[219] सः ॥ ८८ ॥
मुक्तस्य देहोस्ति स निश्शरीरः चिन्मात्रदेहश्च वितीर्णशोकः[220] ।
सृष्ट्यादिवर्जे परसाम्यगामी पुनर्जनिं नैव विमुक्त एति[221] ॥ ८९ ॥
मुक्तस्सदानन्दविशिष्ट एव हरेस्समीपेऽनुभवत्यभीष्टम्[222] ।
नावर्तते प्राप्य हरिं विमुक्तः स्वानन्दभुग्विष्णुसमीप[223] आस्ते ।
चतुर्थकाध्यायगतेषु पत्सु चतुर्षुचार्था इह संगृहीताः ॥ ९० ॥
सूत्रसंख्या चतुष्षष्टिः तथा पञ्चशतानि च ।
संख्याधिकरणानां च त्रयोविंशतिरेव च ॥ ९१ ॥
शतद्वयेन सहिता मध्वभाष्ये समीरिता ।
आनन्दाधिकरणतश्चायं संग्रहोयं मयोदितः ॥ ९२ ॥
(सूत्राणि ५६४ अधिकरणानि २२३)
श्रीमध्वभाष्यार्थसुसंग्रहोयं रङ्गार्यनाम्ना विदुषा गृहीतः ।
विपश्चितोमुं कृपया मुदा च गृह्णन्तु चित्ते शरणं हरिर्नः ॥ ९३ ॥
कुत्तालं वासुदेवार्यं द्वैतवेदान्तपण्डितम् ।
स्मरामि यस्मात् अवेदं शास्त्रार्थं सत्क्रियावतः ॥ ९४ ॥
मीमांसाख्यं पाणिनीयं च तन्त्रं श्रीमद्वेदो याजुषः कारिजाद्यैः ।
गीतागाथाव्याससूत्रत्रिभाष्यं येनाधीतं ज्योतिषं सद्गुरुभ्यः ॥ ९५ ॥
नूतनसालाख्यदेशोगतसभादानाधिकारिणा ।
रङ्गाचार्येण तेनायं कृतो विजयतां भुवि । ९६ ॥ ओं

इति काञ्चि, नङ्गीपुरं, मततत्त्वनिरूपक रङ्गाचार्याणां कृतिषु
द्वैतभाष्याधिकरणार्थसंग्रहः संपूर्णः ॥

## आधिकरणनामधेयसूचिका
## ( अद्वैतम् )

श्रीः

## श्रीभाष्याधिकरण संख्यासूचकपत्रिका ॥

### प्रथमाध्याय ॥



### अथद्वितीयाध्यायः

अथ चतुर्थाध्यायः ॥



---

श्रीः

## द्वैतभाष्याधिकरण संख्यासूचकपत्रिका ॥

### प्रथमाध्याय ॥

1 जिज्ञासाधिकरणम् ।
2 जन्माद्यधिकरणम् ।
3 शास्त्रयोनित्वाधिकरणम् ।
4 समन्वयाधिकरणम् ।
5 ईक्षत्यधिकरणम् ।
6 आनन्दमयाधिकरणम् ।
7 अन्तस्थत्वाधिकरणम् ।
8 आकाशाधिकरणम् ।
9 प्राणाधिकरणम् ।
10 ज्योतिरधिकरणम् ।
11 गायत्र्यधिकरणम् ।
12 अन्तिमप्राणाधिकरणम् ।
13 सर्वगतत्वाधिकरणम् ।
14 अत्तृत्वाधिकरणम् ।
15 गुहाधिकरणम् ।
16 अन्तराधिकरणम् ।
17 अन्तर्याम्यधिकरणम् ।
18 अदृश्यत्वाधिकरणम् ।
19 वैश्वानराधिकरणम् ।
20 द्युभ्वाद्यधिकरणम् ।
21 भूमाधिकरणम् ।
22 अक्षराधिकरणम् ।
23 सदधिकरणम् ।
24 दहराधिकरणम् ।
25 अनुकृत्यधिकरणम् ।
26 वामनाधिकरणम् ।
27 देवताधिकरणम् ।
28 अपशूद्राधिकरणम् ।
29 कम्पनाधिकरणम् ।
30 ज्योतिरधिकरणम् ।
31 आकाशाधिकरणम् ।
32 सुषुप्त्यधिकरणम् ।
33 ब्रह्मणाधिकरणं ।
34 आनुमानिकाधिकरणम् ।
35 ज्योतिरुपक्रमाधिकरणम् ।
36 नसंख्योपसंग्रहाधिकरणम् ।
37 कारणत्वेनचाकाशाधिकरणम् ।
38 समाकर्षाधिकरणम् ।
39 प्रकृत्यधिकरणम् ।
40 एतेनसर्वेव्याख्यताधिकरणम् ।
41 स्मृत्यधिकरणम् ।
42 न विलक्षणत्वाधिकरणम् ।
43 अभिमान्याधिकरणं
44 असदधिकरणं ।
45 भोक्त्रधिकरणं ।
46 आरम्भणाधिकरणम् ।
47 इतरव्यपदेशाधिकरणम् ।
48 श्रुतिशब्दमूलत्वाधिकरणम् ।
49 न प्रयोजनवत्वाधिकरणम् ।
50 वैषम्यनैर्घृण्याधिकरणम् ।
51 सर्वधर्मोपपत्त्यधिकरणम् ।
52 रचनाधिकरणम् ।

अथ चतुर्थाध्यायः ॥

श्रीः

# द्वैतभाष्याधिकरण संख्यासूचकपत्रिका ॥

## प्रथमाध्याय ॥

अथ द्वितीयाध्यायः

112 तातिचिरेणाधिकरणम् ।
113 अन्याधिकरणम् ।
114 रेतोधिकरणम् ।
115 योन्याधिकरणम् ।
116 सन्ध्याधिकरणम ।
117 पराभिध्याधिकरणम् ।
118 देहयोगाधिकरणम ।
119 तदभावाधिकरणम् ।
120 प्रबोधाधिकरणम् ।
121 कर्मानुस्मृत्यधिकरणम् ।
122 संपत्त्याधिकरणम् ।
123 न स्थानतोधिकरणं ।
124 इत्यरूपाधिकरणम् ।
125 फलाधिकरणम् ।
126 अम्बुवदधिकरणं
127 वृद्धिह्रासाधिकरणम ।
128 प्रकृतैतावत्त्वाधिकरम् ।
129 तदव्यक्ताधिकरणम ।
130 अहिकुण्डलाधिकरणं ।
131 परमतोधिकरणम ।
132 स्थानविशेषाधिकरणम् ।
133 तथान्यत्वा(द,धिकरणम् ।
134 अनेनसर्वगत्वाधिकरणम् ।
135 फलाधिकरणम् ।
136 सर्ववेदाधिकरणम् ।
137 उपसंहाराधिकरणम् ।
138 प्राप्त्यधिकरणम ।
139 सर्वापेदाधिकरणम् ।
140 आनन्दाधिकरणम् ।
141 प्रियशिरस्त्वाधिकरणं ।
142 इतराधिकरणं ।
143 आध्यानाधिकरणं ।
144 आत्मगृहीत्यधिकरणं ।
145 अन्वयाधिकरणम् ।
146 कार्याधिकरणं ।
147 समानाधिकरणं ।
148 नत्राविशेषाधिधिकरणं ।
149 सम्भृत्यधिकरणं ।
150 पुरुषविद्याधिकरणं ।
151 वेधाधिकरणं ।
152 हान्याधिकरणं ।
153 छन्दाधिकरणं ।
154 अनियमाधिकरणं ।
155 यावनधिकरणं ।
156 इयदामननाधिकरणं ।
157 व्यतिधिकरणम् ।
158 सत्याधिकरणम् ।
159 कामाधिकरणम् ।
160 निर्धारणाधिकरणम् ।
161 प्रदानाधिकरणम् ।
162 लिङ्गभूयस्त्वाधिकरणम् ।
163 विकल्पाधिकरणम् ।
164 विद्याधिकरणम् ।
165 श्रुत्याधिकरणम ।
166 अनुबन्धाधिकरणम् ।
167 प्रज्ञान्तराधिकरणम् ।
168 नसमान्याधिकरणं ।
169 परेणाधिकरणं ।
170 एकाधिकरणं ।
171 अङ्गावबद्धाधिकरणं ।

॥ श्रीः ॥

॥ श्रीमते लक्ष्मीनृसिंहपरब्रह्मणे नमः ॥

# ॥ मतत्रयसारसंग्रहः ॥

(शास्त्रावतारः)

(अद्वैतमतम्)

॥ श्रीशङ्करार्याय जगद्गुरवे नमः ॥

श्रवादिशेषपवना गुरवः पुराऽभुः
श्रीशंकरार्य रघुरामकनिष्ठ मध्वाः ।
तान् संप्रणम्य तदनुग्रहवाञ्छयैव
तद्भाष्यसंग्रहमिमं विलिखामि पद्यैः ॥ १ ॥

श्री अण्णावाजपेयाभिधगुरुमनघं सर्वशास्त्रार्थविज्ञम्
श्रीयज्ञस्वामिसंज्ञं मखिकुलतिलकं श्रीवटारण्यवासम् ।
सेवे श्रीरामचन्द्रं क्रमपदकजटावर्णचर्चाविशेष-
ग्राह्यं श्रीकेरळेशार्चितपदकमलं वेदवेदाङ्गदक्षम् ॥ २ ॥

यस्मिन् वेदव्यास इति पदं सार्थं न चेतरे ।
नमामि पाराशर्यं तं ब्रह्मसूत्रप्रकाशकम् ॥ ३ ॥

केवला चितिराभाति जगद्रूपेण मायया ।
वन्देऽहं नरसिंहं तं ब्रह्मेशहरिरूपिणम् ॥ ४ ॥

बृहदारण्यकमस्ति लोके तदर्थनिष्ठो जगदार्य एषः ।
तदन्यवेदान्तविभागपूगः तदर्थवदीत्यवदत् स्वभाष्ये ॥ ५ ॥

ब्रह्मायमात्मेत्यहमस्मि ब्रह्म त्वं चाऽहमस्मीत्यखिलागमोक्तेः ।
द्रष्टव्य आत्मेति च वेदवाक्यात् आत्मैव जिज्ञास्य इति स्म वक्ति॥

नश्यत्स्वभावं विकृतिस्वरूपं विचित्रभेदं च जगत्सुदृष्टम् ।
नित्यैकरूपं परिशुद्धतेजः पुञ्जस्समं ब्रह्मचिदेकमाभात् ॥ ७ ॥

ब्रह्मैव सर्वं न तु किञ्चनेह मायाविचित्रं पुरुरूप इन्द्रः ।
इत्यादि वेदान्तरहस्यवाचां अर्थं बभाषे स हि शङ्करार्यः ॥ ८ ॥

ब्रह्मैव सर्वं जगदेव मिथ्या जपाप्रसूनं स्फटिके यथा वा ।
अज्ञानरूपं विविधं विभाति ज्ञाने ह्यविद्याविनिवर्तनीया ॥ ९ ॥

अनाद्यविद्याविहतिः प्रासाध्या यद्रज्जुसर्पादिविशेषबोधात् ।
निवर्तते तत्त्वमसीति बोधात् जगद्विशुद्धाचितिरेवशेषा ॥ १० ॥

इत्थं विनिश्चित्य हि सर्ववेत्ता श्रीशङ्करार्यो निखिलागमानाम् ।
अद्भुतभावं निजसूत्रभाष्ये ब्रह्मैव जीवो विनिवृत्तबन्धः ॥ ११ ॥

रज्जौ यथा सर्पमतिः स्वभाते ज्ञाने जगद्धीः नतु तथ्यमेतत् ।
जगत्तु नाशयादिगुणोपपन्नं ज्ञानं तु शुद्धं ह्यविकारि नित्यम् ॥ १२ ॥

तत्ताद्दशज्ञानमनाद्यविद्याऽऽदर्शे विचित्रं प्रतिभाति नाना ।
साध्याह्यविद्याविनिवृत्तिरेव ज्ञानं न साध्यं स्वयमेव भानम् ॥ १३ ॥

अज्ञानानृततुच्छकैश्च बहुभिः नीहारमायातमः
शालाद्यैः पिहितं च गूढमिति च ज्ञानं श्रुतौ श्रूयते ।
तच्चिन्त्या बहुधा विभाति जगति ज्ञानस्वरूपं च तत्
ज्ञातृज्ञेयविभागवत्तदखिलं रूप्यादिवत् भाष्यते ॥ १४ ॥

चिच्छायासङ्गमकत्या बहुविध चिदचित्भोक्तृभोग्यादिभिश्च
भ्रान्तं ज्ञानस्वरूपं भवति च वितथा मानजज्ञानभावात् ।
भ्रान्तात्मा मुक्तिकामः शमसुखकरणज्ञानवान् श्रोतुकामः
ब्रह्मात्मज्ञानमेवं गुरुपदकमलोपासनं संप्रतीच्छेत् ॥ १५ ॥

एको विभुः सर्वगतश्चिदात्माऽविद्यावशात्कविधात्मरूपी ।
भ्रान्तेर्निवृत्या निजरूपभाक् स्यात् भावात्मकाज्ञानबलाच्च मुक्तम्

संख्याऽधिकरणानां च यत्रैकनवतिश्शतम् ।
सूत्रसंख्या पञ्चपञ्चाशच्च पञ्चशतानि च ॥ १७ ॥

समन्वयाविरोधौ च साधनं च फलं तथा ।
भगवत्पादभाष्येऽत्र वर्णितानीति बुध्यताम् ॥ १८ ॥

अधिकरणानि १९१
सूत्राणि ५५५

## ॐ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

मोक्षेऽभिलाषा च फले विरक्तिः नित्यादिधीश्शान्तिरितीह छात्रे ।
इमानि चत्वारि तु पूर्ववृत्तान्यपेक्षते ब्रह्मविचार एषः ॥ १९ ॥

अत्र केचित् आश्रयानुपपत्ति-तिरोधानानुपपत्ति-स्वरूपानुपपत्ति-अनिर्वचनीयानुपपत्ति-प्रमाणानुपपत्ति-निवर्तकानुपपत्ति-निवृत्त्यनुपपत्तिभिः, सप्तविधाभिः ब्रह्मणः अविद्याश्रयत्वादिकं न संभवतीति अद्वैतब्रह्मणः जिज्ञास्यत्वं नेत्यवोचन् । अत्र केचित् प्रत्यवोचन् सप्तविधयुक्तियुक्तश्लोकेन ।

'यस्मिन्नध्यस्तमेतत्त्रिभुवनमखिलं यश्च पश्यत्यविद्या
मुग्धं स्वाध्यस्तमेतद्यदपि निजवपुर्वीक्षणे मुच्यते यत् ।
ज्ञानं ज्ञेयादिहीनं भवति यदपदं संविदां निर्विशेषं
सत्यं तद्ब्रह्म मिथ्या तदितरदखिलं कोऽन्यथा वक्तुमीशः ॥ '
"मानात्सिध्यतु सर्वमेव भुवनं मानं तु सिध्येत् कुतः
किं स्वेनैव तथाऽस्तु तर्हि भुवनं मानेऽपि मानं यदि ।
हन्तस्यादनवस्थितिः विरमतो मेयं च न स्यादिति
क्वेदं सिध्यति विश्वमेतदखिलं सत्यं प्रमेयं च भोः ॥ " इति ॥

न द्वैतं प्रतिपादयन्त्युपनिषद्वाचः प्रसिद्धं हि तत्
किन्त्वद्वैतमनन्यगोचरतया तद्वेद्यमाश्रीयताम् ।
अप्राप्ते खलु शास्त्रमर्थवदिति द्वैतप्रयासो वृथा
ह्यद्वैतं परमार्थतः प्रभवति द्वैतं मृषा पश्यति ॥ २० ॥

सदा विशुद्धं स्वयमेव भातं चिन्मात्रमात्मेति वदन्ति वेदाः ।
एकं सदेवाद्वितयं द्वितीयात् मयं निगूढं तमसाऽऽवृतेन ॥ २३ ॥
भावाज्ञानेनावृतं स्वप्रकाशं ज्ञानं ब्रह्माज्ञाननाशात्प्रकाशि ।
स्वर्भान्वाख्यो ध्वान्तपुञ्जेन सूर्यं प्राविश्यत्तं सुप्रसिद्धं हि वेदे ॥
मूढोऽहमज्ञोऽहमिति प्रवादः ज्ञानस्य सत्त्वेऽपि यथाऽविरोधः ।
तथाऽयमात्मा तमसा सहापि स्थित्वा जगद्रूप इहापि भाति ॥
यथा तमश्शब्दविचारकाले प्रकाशशब्दार्थमपेक्षते न ।
भावात्मकाज्ञानविचारकाले ज्ञानात्मनः ज्ञानमपेक्षते न ॥ २४ ॥

अप्राकृतं शुद्धमिहेति सत्त्वमाश्रित्य वैकुण्ठमुखं यथा ते ।
आविद्यकं सर्वमिहापि युक्तं ह्यप्राकृतं कर्म च वै प्रकल्प्ये ॥२५॥

नित्यो विभुस्सर्वगतोऽह्यणीयान् अजःपुराणो बहुधा विजातः ।
विरुद्धवाचो न परस्परं ताः भावात्मकाज्ञानसहे परस्मिन् ॥२६॥

न स्त्रीपुमान् नापि नपुंसकं च ब्रह्मात्मनो रूपमतो विमुक्तिः ।
यज्ज्योतिषा ज्योतिष ऐक्यमाहुः स्वराट् पदस्य श्रवणाद्विमुक्तौ ॥

इति सिद्धान्तात् प्रमेयमेव न किञ्चित्सत्यमस्त्यस्मिन् मते इति प्रमेयत्वा-पादनं न युक्तम् । अत्र प्रमाणं अयं भागवत श्लोकः —

“ स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान्न जन्तुः ।
नायं गुणः कर्म न सन्नचासन् निषेधशेषो जयतादशेषः ॥ ” इति
“ स एष नेति नेति ” इत्यादि श्रुतिश्च ।

अत्र सिद्धान्ते चिन्मात्रब्रह्मैव सत्यं; अन्यत् मिथ्या; भावरूपाज्ञानेन आच्छादितं ब्रह्म जगदिव, रज्जौ सर्प इव, भासते । चिन्मात्रं ब्रह्म च निर्गुणमेव । वेदान्तजन्यज्ञानेन भावरूपाज्ञाननाशे सति ब्रह्म स्वयंप्रकाशमेव वर्तते । अविद्याश्रित ब्रह्मणि जगदध्यासे द्वैतप्रतिभानं । सर्वे वेदान्ताः अद्वैतमेव प्रतिपादयन्ति । द्वैतस्य प्रत्यक्षसिद्धत्वात् तत्र न वेदान्तापेक्षा ।

अज्ञानेन ज्ञानस्याऽच्छादनं कथं संभवतीति चेत्, " सुवर्भानुरासुरस्सूर्यं तमसाऽविध्यत्; तस्मै देवाः प्रायश्चित्तिमैच्छन् " इत्यादि यजुस्संहिताद्वितीयकाण्ड द्वितीयप्रश्नद्वितीयानुवाके तमःपुञ्जरूपः सुवर्भानुरासुरः (सुवर्भानुः=स्वर्गस्य भां नुदति-छादयति इति - सुवर्भानुरिति व्युत्पत्तिः) स्वकीयतमसा सूर्यं छादयामास । ततो जगदान्ध्यमभवत् । ततः सूर्यमच्छादकस्य तमसः प्रायश्चित्तं देवाः विचार्य नानाविधैः प्रकाशरूपैः मण्यादिद्रव्यैः चतुर्भिः पर्यायैः तमोऽपाघ्नन्; इति कथा वर्तते । तद्रीत्या चिद्रूपब्रह्मणः भावरूपाज्ञानेन छादनं युक्तमेव॥

अपिच भूलोकेऽपि सूर्यं राहुः उपरागकाले छादयतीति सुप्रसिद्धमेव । अतः अविद्याश्रयत्वेऽपि न दोषः ॥

किञ्च यथा परमते ब्रह्मणः सूक्ष्मचिदचिद्विशिष्टावस्था एका, स्थूलचिदचिद्विशिष्टावस्था अन्या; जगत्सृष्टिकाले स्थूलचिदचिद्विशिष्टावस्था अङ्गीक्रियते; प्रलयकाले सूक्ष्मचिदचिद्विशिष्टावस्था इति अवस्थाद्वयं अंगीकृत्य सर्वश्रुत्युपपत्तिः वर्ण्यते, तथा अस्मन्मतेऽपि अविद्यातिरोहितावस्था एका; अविद्याराहित्यावस्था अन्या; तथा च निर्गुणत्वादिप्रतिपादकानां श्रुतिवाक्यानां अविद्याराहित्यकाले शुद्धब्रह्मणि समन्वयः; सत्यकामत्वादिप्रतिपादकवाक्यानां अविद्याविशिष्टब्रह्मणि समन्वय इति स्वरसत एव श्रुत्यर्थो भवति । परमते तु अप्राकृतं शुद्धसत्त्वमित्यन्यत् परिकल्प्य वैकुण्ठादिवर्णनमधिक्रियं । अतश्च 'अनृतेन प्रत्यूढाः' इत्यादिबहुश्रुतयः तत्त्वमसीति वाक्यार्थान्यथानुपपत्तिः, लौकिकप्रतीतिः, युक्तयश्च इत्येवमादिप्रमाणबाहुल्यात् अविद्यातदाश्रयत्वाद्यङ्गीकृतौ न कोऽपि दोष इति सिद्धं इति मतप्रक्रिया संग्रहः ।

अत्र किंचित् विविच्य उच्यते । तत्र प्रथमं अविद्याश्रयत्वं ब्रह्मणः संभवतीति इदानीं उच्यते ।

" ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् ।
अज्ञानं चेत्तिरस्कुर्यात् कः प्रसुक्तन्निवर्तकः ॥ "
" ज्ञानं ब्रह्मेति चेत् ज्ञानं अज्ञानस्य निवर्तकम् ।
ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम् ॥ "

इति कैश्चित् प्रकाशरूप ब्रह्मणः तमोरूपाविद्याश्रयत्वं न संभवतीत्युक्तम् । ब्रह्म ज्ञानस्वरूपमिति आचार्योपदेशजन्यं ज्ञानं अविद्यायाः निवर्तकं भवेत् इत्युक्ते ब्रह्मणः प्रमेयत्वं अननुभूतित्वं च स्यादिति दूषणं अविद्याश्रयत्वे उक्तम् । तदयुक्तम् ।

तथाहि " ज्ञानं. ब्रह्मेति " आचार्योपदिष्टप्रमाणजन्यज्ञानस्य, ब्रह्मस्वरूपभूत ज्ञानस्य च भिन्नत्वात् प्रमेयत्वादि दोषाः न संभवन्ति । मलिनदर्पणे प्रतिबिम्बभूत एव मुखे मलिनत्वादि दोषाः यथा [illegible] संभवन्ति; न तु बिम्बमुखे; तद्वत् अविद्याश्रयत्वे संभाविता दोषाः जीवगता एवेति न कश्चिद्विरोधः ब्रह्मणः अविद्याश्रयत्वे ॥

" आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला । "

इति प्रमाणात् शुद्धचिदाश्रितमेव अज्ञानं अंगीकर्तव्यम् । अविद्याश्रयत्वं च ब्रह्मणः लोके स्त्रीपुरुषसंसर्गात् पुत्राद्युत्पत्तिरिव नेह ब्रह्मणि संभवति । किन्तु ज्ञानस्वरूपब्रह्मणि अनाद्यविद्यासान्निध्यात् स्फटिके रक्तिमेव अध्यस्यते । आचार्योपदिष्ट प्रमाणजन्यज्ञानस्य " ब्रह्मवत् तत्प्रकाशत्वात् " इति तैरुक्तं स्वयंप्रकाशत्वं न भवत्येव; ब्रह्मस्वरूपज्ञानस्य अजन्यत्वात्, शास्त्रज्ञानस्य च जन्यत्वात् । " ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकं " इति तदुक्तिः, " न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति " तद्भाष्योक्तिश्च न संगच्छेते । ज्ञानत्वावच्छेदेन उभयज्ञानस्य एकत्वसंभावना न युक्ता, स्वयंप्रकाशत्वजन्यत्वरूपविशेषसद्भावात् ।

किञ्च महावाक्यचतुष्टयात् तत्त्वमसीति जीवैक्योपदेशानुपपत्त्या च (1) " अनृतेन हि प्रत्यूढाः " (2) " नीहारेण प्रावृता " (संहितायां

तुरीये काण्डे) (3) "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं" (4) 'आनीदवातं स्वधया तदेकं' (स्वधया=अविद्यया) (5) 'तस्माद्धान्यं न परः किंचनास' (6) "तमसा गूढमग्रे प्रकेतं" (7) "तम आसीत्" (8) "तुच्छेनाभ्वपिहितं यदासीत्" (२—८—९ शाखा) (9) "इन्द्रो मायाभिः पुरुरूप ईयते" (10) "हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं" (11) "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" (12) "अनादि मायया सुप्तो यदा जीवः प्रबुध्यते" इत्यादिभिः प्रमाणशतैः अविद्यामंगीकृत्य अविद्याश्रयत्वं ब्रह्मणः वाच्यम् ।

किञ्च अविद्यानिष्ठस्य शिष्यस्य अविद्यानिष्ठगुरुणा अविद्याश्रयं ब्रह्म अविद्यारहितत्वेन उपदिश्यते । न तु शुद्धब्रह्म इति शुद्धब्रह्मणः प्रमेयत्वं न स्यादेव ।

"सच्चिद्ब्रह्म न संवेद्यं संवेद्यमनृतं जडम्" इति सिद्धान्तात्, शुद्धब्रह्मणः, "अवचनेन प्रोवाच" इति शास्त्रात्, उपदेश्यत्वं न संभवेदेव ।

अपिच

> "तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् ।
> संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥"

इति सांख्यमते यथा वा प्रकृतेरेव सर्वं नतु पुरुषस्य इत्युच्यते तद्वत् अविद्याश्रयमेव सर्वं सुखदुःखभाक्त्वादिकं च वर्तत इति न कोपि दोषो ब्रह्मणः ।

अविद्याविषयभूत ब्रह्मण एव जिज्ञास्यत्वं इति आचार्याभिप्रेतेति सामर्थ्यां "तदेवमनौपाधिकं ब्रह्मणो रूपं दर्शयित्वा अविद्योपाधिकं रूपमाह" ।—(भाष्यम् "सर्वज्ञं सर्वशक्तिसमन्वितम्") "जगत्कारणत्वं अस्य दर्शितं, शक्तिज्ञानभावाभावानुविधानात् कारणत्वभावाभावयोः" इति । "अविद्योपाधिकमिति—अविद्याविषयीकृतं इत्यर्थः" । इति कल्पतरुः ।

तथा च जगत्कारणभूत ब्रह्मण एव जिज्ञास्यतोक्तेः, अविद्याविषयीकृतं ब्रह्मैव जगत्कारणं, न तु शुद्धब्रह्म इति हि स्थापितम् ।

'किञ्च ज्ञानरूपं ब्रह्म ' इत्युपदिष्टज्ञानस्य ब्रह्मस्वरूपभूतज्ञानस्य च ज्ञानत्वावच्छेदेन अभेदं गृहीत्वा दोषदर्शने "रुद्रः पशूनामधिपतिः; पशवः पाशिताः पूर्वं " इत्यादि प्रमाणात् जीववर्गस्य पशुत्वात् पशुत्वावच्छेदेन सर्वस्यापि तुल्यत्वाङ्गीकृतौ पशुरित्युक्ते व्यासादीनामपि बोधः स्यात् । इष्टापत्तौ आब्रह्मस्तम्बपर्यन्तेषु प्राणिषु सत्स्वपि, ज्ञानतारतम्यस्य सत्त्वादिति 'देवताधिकरणभाष्योक्तिः' विरुद्ध्येत ।

किञ्च गुरूपदेशजन्यज्ञानं अविद्याविनाशकं इत्युक्तिं दूषयता परेण " ब्रह्मवत् स्वप्रकाशत्वात् तदपि भ्रान्तिबाधकं " इति ब्रह्मस्वरूपज्ञानस्य, उपदेशजन्यज्ञानस्य च विशेषाभाव इत्युक्तम् । तन्मते आत्मन. ज्ञानस्वरूपमङ्गीकृत्य तद्गुणत्वेन अन्यद्धर्मभूतज्ञानमभ्युपगम्य प्रभायाः संकोचविकासाविव धर्मभूतज्ञानस्यैव संकोचविकासौ भवत इत्यभ्युपगच्छन्ति । तत्र आत्मस्वरूपज्ञानस्य, धर्मभूतज्ञानस्य च ज्ञानत्वावच्छेदेन अविशेषात् स्वरूपभूतज्ञानस्यापि संकोचविकासौ भवेतां इत्युक्ते किं प्रतिब्रूयुः । इति ॥

तत्त्वमसीति ऐक्योपदेशान्यथानुपपत्त्या प्रपञ्चस्य अविद्याकल्पितत्वं, ब्रह्मणः अविद्याश्रयत्वं च आश्रयणीयमित्युक्तं, न युक्तमिति रामसुब्रह्मण्यशास्त्रि विद्वद्वराः—'तत्त्वं' इति एकमेव समस्तं पदम् । न तु व्यस्तम्; व्यस्ताश्रयणे पूर्वत्र "स आत्मेति" निर्देशात्, त्वं शब्दस्य तद्विशेषणत्वेन "सत्वं" इति निर्देष्टव्यं स्यात् । यतः 'तत्त्वं' इति एकमेव पदम् । तस्य त्वं—तत्त्वं इति षष्ठीतत्पुरुषमाश्रित्य तत्संबन्धी पुरुषः त्वं इत्यर्थः । संबन्धश्च राजपुरुषवत् शेषशेषिभावः (स्वस्वामिभावसंबन्धः) तस्य दासः त्वं इति तत्त्वं पदस्य जीवब्रह्मभेद एव अर्थः इति ऐक्योपदेशासम्भवात् अन्यथानुपपत्तिरेव नेति प्रत्योचन् ।

केचित् "तत् सत्यं स आत्मा तत्त्वमसि" इत्यत्र यजुर्वेदे त्रिक्रमस्थले "माऽऽस्थात् प्रियमाऽविशत" इत्यादिष्विव "अघोराऽऽपापकाशिनी" इत्यत्रेव इह च अतत्त्वमसीति प्रश्लिष्य, "द्वा सुपर्णा सयुजा सखायौ" इत्यादि श्रुत्यनुरोधेन अब्रह्म त्वमसि इत्यर्थमाश्रित्य जीवब्रह्मभेद एव सिध्यति; इत्यब्रुवन्।

विश्च तत्त्वमसीति पदच्छेदेऽपि, एकपदाश्रयणेन तेन त्वं; तस्मै त्वम्; तस्मात् त्वम्; तस्य त्वं; तस्मिन् त्वं=तत्त्वं इति विग्रहमाश्रित्य तदीयस्त्वं असि इत्येव अर्थः। "कर्तृकरणे कृता बहुलं" इति बहुलग्रहणात्, 'चतुर्थी तदर्थार्थ' इति सूत्रे चतुर्थी इति योगविभागात्, "पञ्चमी भयेन" इति सूत्रे पञ्चमी इति योगविभागात्, 'षष्टि' इति सूत्रेण, "सप्तमी शौण्डैः" इति सूत्रे सप्तमीति योगविभागात् यथाक्रमं तत्त्वं पदस्य समासोपि भवति। अतश्च भेद एव सिध्यतीति नैक्योपदेशान्यथानुपपत्तिरिति मध्वार्याः वदन्ति।

प्रथमपक्षे विशेषणं विशेष्यानुगुणं लिङ्गं भवितुमर्हति इत्यत्र न नियमः। "शैत्यं हि यत्सा प्रकृतिर्जलस्य" इत्यादि प्रयोगात् "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति महाभाष्यकारवचनात् "व्यत्ययो बहुलं" इति सूत्रे

"सुप्तिङुपग्रह लिङ्गनराणां काल हल्च्स्वर कर्तृयङाञ्च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेन" ॥ इति

वार्तिककारोक्त्या च नपुंसकलिङ्गस्यापि पुल्लिङ्गार्थबोधकत्वे न दोष इति 'तत् त्वम्' इति व्यस्तं पदमेव।

समस्तपदाभ्युपगमे तृतीयादि समासाश्रयणे च योगविभागादिक्लिष्टगत्याश्रयणं सम्भवति। पृथक्पदत्व पक्षे तु 'त्वं' शब्दस्य नपुंसकलिङ्गत्वेपि त्रिषु लिंगेषु युष्मदस्मदोः सरूपत्वात् 'अलिंगे युष्मदस्मदी' इति वैय्याकरणाभ्युपगमाच्च सामानाधिकरण्यं युक्तमेव। 'पदद्वयस्यापि चैतन्यमेव अर्थ' इति न नपुंसकलिङ्गतच्छब्देन सामानाधिकरण्यविरोधः।

किञ्च 'तत्त्वं' इति समस्तपदाश्रयणेऽपि तदेव त्वं =तत्त्वं, तदभिन्नत्वं— तत्त्वं इति " अब्भक्षो " " वायुभक्षः " इतिवत् 'सर्वं वाक्यं सावधारणं' इति न्यायेन शाकपार्थिवादिवत् (शाकप्रियः पार्थिवः = शाकपार्थिवः इतिवत्) समासाश्रयणेन, 'मयूरव्यंसकादयश्च' इति सूत्रे आकृतिगणत्वात् समासाश्रयणेन मध्यमपदलोपे सति अभेद एव अर्थो गृह्यते; न तु भेदः ।

अपिच तत्त्वमसीति समस्तपदेऽपि ' तच्चासौ त्वं च ', ' तच्च त्वं च ' इति वा कर्मधारयाश्रयणेन ' एतया निषादस्थपतिं याजयेत् ' इति श्रुत्यर्थविचारे निषादश्चासौ स्थपतिश्च निषादस्थपतिरिति कर्मधारयो वा, निषादानां स्थपतिरिति षष्ठीतत्पुरुषो वेति विचार्य, षष्ठीतत्पुरुषपक्षे निषादस्थपतिरित्यत्र निषाद-शब्दस्य निषादसम्बन्धिपर्यन्तार्थः अभ्युपेयः । 'ऋद्धस्य राजपुरुषः' इति प्रयोगवारणाय तत्पुरुषसमासे उत्तरपदार्थस्यापि पूर्वपदार्थे सद्भाव इति एकार्थीभावरूपलक्षणया आश्रितः । कर्मधारये तु तादृशदोषो नास्तीति कृत्वा स्थपतिर्निषादस्स्यादित्यधिकरणे निषाद एव स्थपतिरित्याश्रयणे निषादस्य उपनयनाध्ययनाद्यभावात् कथं यजनमिति न शङ्कनीयम् । वेदविहितत्वात् तद्यागमात्रकरण उपयोगितया उपनयनाध्ययनादिकं तस्य कारयितव्यं इति, फलमुखगौरवस्य अदोषत्वात् इत्युक्तम् । तद्वत् अत्र ' तत् त्वं ' पदयोः ऐक्य-मेव अर्थो भवति इति । नन्वेवं सति प्रकृतयोः ' तत् त्वं ' पदयोः चैतन्य-रूपयोः ऐक्यरूपे अर्थे विवक्षिते, विशेषणभूतयोः सर्वज्ञत्वादि श्वेतकेतुसाक्षि-पिण्डत्वादि विशेषणयोः अर्थान्वयाभावात् विशेषणांशं त्यक्त्वा विशेष्यपदयोः चैतन्ययोः ऐक्यं इति उभयत्र लक्षणैव दोष इति चेत्; मीमांसकमते अपूर्वसञ्ज्ञिक कार्यरूप एव अर्थे लिङादेः प्रथमं शक्तिमभ्युपगम्य क्रियाकार्यस्यापि अन्विताभिधायित्वेन लिङादेः तदन्वितपदानां च अर्थः लक्षणया अङ्गीकृतः । तद्वत् अस्मन्मतेऽपि उभयत्र लक्षणा न दोषाय भवति । तात्पर्यानुपपत्तिरेव लक्षणा-बीजमस्त्यत्र । बीजं विना लक्षणया अर्थवर्णनं न युक्तमित्येव तात्पर्यम् ।

किञ्च ' सोऽयं देवदत्तः ' इत्यत्र यथा उभयत्र देशकालौ हित्वा यथा देव-दत्तैक्यप्रत्यभिज्ञा जायते तद्वत् तत्त्वमसीत्यत्रापि उभयत्र विशेषणं त्यक्त्वा

विशेष्यमात्रस्य अर्थबोधो भवत्येव । विषं भुङ्क्ष्व महाराज इत्यादौ विषमित्यस्य विरोधिगृहान्नं, भुङ्क्ष्वेत्यस्य मा भुङ्क्थाः इतिवत् उभयत्र लक्षणा न दोषायैव । अत एव पूर्वाचार्यैः इयं शुकरहस्यश्रुतिः प्रमाणतया उपन्यस्ता ।

वाच्यं लक्ष्यमिति द्विधार्थसरणी वाच्यस्य हि त्वं पदे
वाच्यं भौतिकमिन्द्रियादिरपि यल्लक्ष्यं त्वमर्थश्च सः ।
वाच्यं तत्परमीशता कृतमतिर्लक्ष्यं तु सच्चित्सुखा-
ऽऽनन्दब्रह्म तदर्थ एव च तयोः ऐक्यं त्वसीदं पदम् ॥

'त्वमिति तदिति कार्ये कारणे सत्युपाधौ
द्वितयमितरथैकं सच्चिदानन्दरूपम् ।
उभयवचनहेतू देशकालौ च हित्वा
जगति भवति सोयं देवदत्तो यथैकः । ' इति ॥

एवं श्वेतकेतुं वदतीह तच्च ब्रह्माह मार्वात्म्यगुणादिजुष्टम् ।
तयोस्समानाधिकृतिर्नयुक्ता तस्माच्चितोर्लक्षणमैक्यमेव ॥ २८ ॥

ऐतदात्म्यमिति पूर्वदर्शनात् तत् पदादपि तदात्मबोधः ।
भासि सोम्य परात्मवपुस्त्वं लक्षणा न भवतीति परे तु ॥२९॥

भो 'स आत्मा' सन्निधस्थ 'तत्'पदं सर्वज्ञपरमात्मबोधकम् ।
त्वं पदं भवति केतुवाचकं तर्हि वृत्तिरनघा पदद्वये ॥

मतद्वयेऽप्यापततीह दोषः पदद्वये ते पद एव मे तु ।
दोषो हि तुल्येन न परोऽनुयोज्यः एकं द्वयं वा सममेव चाऽगः ॥

पदं विभज्यातत् इत्यथात्र ब्रह्मास्मि न त्वं तु विभिन्न एव ।
मैवं विभेदो विदितो हि सर्वैः अद्वैततत्त्वं मतभ्यमेव ॥३२॥

द्वयोर्बहूनामपि लक्षणादेः श्रुत्यन्ततात्पर्यमिदं वदन्ति ।
अपूर्वरूपे च लिङ्गादिशक्तिः क्रियात्मके लक्षणयैव बोधः ॥३३॥

आश्रित्यचापर्यवसानवृत्तिं गौणीं विना साध्विति केचिदाहुः ।
साध्याकृतिन्यायत एव वाच्या तत्रापि शक्तिद्वयमेव दृष्टम् ॥३४॥

अज्ञानाद्धि विवर्तते परमिदं ब्रह्मैव विश्वात्मना
नानात्वेन च भासमानमखिलं तथ्यं न लोके ततः ।
मज्ञाज्ञाननिवृत्तिरेव विबुधैः मुक्तिश्च पापठ्यते
ब्रह्मैवाहमिति प्रसिद्धविशदज्ञानात् स्वयं मुक्तिभाक् ॥ ३५ ।

॥ इति सिद्धान्तसंग्रह. ॥

अधिकरणार्थः । पूर्वमीमांसायाः उत्तरमीमांसायाश्च बहुभिः कारणैः भिन्नशास्त्रस्य सिद्धत्वात् साधनसंपन्नस्यैव ब्रह्मजिज्ञासा संभवति इति ॥

---

( विशिष्टाद्वैतम् )

॥ श्रीमते भाष्यकाराय नमः ॥

जिज्ञासाधिकरणम् ॥१॥

ॐ अथातो ब्रह्मजिज्ञासा ॥ १॥

श्रीमद्ब्रह्मन्दवाच्याय श्रीनृकेसरिणे नमः ।
भाष्यं त्रितयतत्त्वार्थो यत्कटाक्षादजायत ॥ ३६ ॥

श्रीविष्णुशठारिश्रीवासशठाकोप यतीश्वरः ।
हृदि भातु सदा भक्तरङ्गाचार्यस्य मे गुरुः ॥ ३७ ॥

श्रीमान्नारायणो देवः चिदचिद्देहवान् प्रभुः ।
अतस्य ब्रह्मशब्दार्थः तद्विचारे यतेत सन् ॥ ३८ ॥

भोक्ता भोग्यं प्रेरितेति श्रुतेश्च सर्वस्यैवं विष्णुदेहश्रुतेश्च ।
त्रयं ब्रह्मविच्चिन्तितं च स्वरूपं तत्पूजाद्यं मोक्षरूपं च शास्त्रे ॥

मीमांसा पूर्वभागस्य विचारानन्तरंत्विह ।
जिज्ञासा ब्रह्मणः प्रोक्ता शास्त्रैकत्वसमर्थनात् ॥ ४० ॥

मीमांसाह्वयमेकमेव कथितं काण्डत्रयालंकृतम्
तत्कर्मात्मक देवतात्मक परब्रह्मात्मकत्वात् त्रिधा ।
कर्तारः खलु जैमिनिः प्रथमतः श्रीकाशकृत्स्नः परः
वेदव्यास महर्षिरेव चरमः कादंबरीवात्र तत् ॥ ४१ ॥

इह तावत् वेदान्तशास्त्रे श्रीमन्नारायणाख्यः पुरुषोत्तमः चेतनाचेतन-प्रपञ्चनियन्ता सर्वज्ञः सर्वशक्तिः सर्वान्तर्यामी सदा नित्यसूरिसंस्तुतः स्वाश्रित-विरोधिवर्गनिरसनरतः निखिलहेयप्रत्यनीक कल्याणैकतानः वैकुण्ठाख्यपरमपद-वासी कश्चन अस्तीति "एको ह वै नारायण आसीत्" "अनीदवातं स्वधया तदेकं" (स्वधया लक्ष्म्या इत्यर्थः) "नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्", "प्रधानक्षेत्रज्ञपतिर्गुणेशः", "सकारणं करणाधिपाधिपः" "स त आत्मा अन्तर्याम्यमृतः",: "यस्सर्वज्ञः सर्ववित्", "पराऽस्य शक्तिर्विविधैव श्रूयते", "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः", "ज्ञाज्ञौ द्वावजावीशनीशौ" 'भोक्ता भोग्यं प्रेरितारं च मत्वा', 'पृथगात्मानं प्रेरितारं च मत्वा', 'यथा प्रयोग्यः आचरणे नियुक्तः', 'अथ य इह आत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्', 'सर्वान् कामान् सह ब्रह्मणा विपश्चिता', 'एतमानन्दमयमात्मानं उपसंक्रामति' "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्पः" 'ओं नमोनारायणायेति मन्त्रोपासकः वैकुण्ठभुवनं गमिष्यति,' 'श्रीरूपबर्हणम्', तस्मिन्ब्रह्मास्ते, 'तमित्थं वित पादेनैवाग्र आरोहति' 'स तत्र पर्येति' 'ब्रह्म-विदाप्नोति परं' 'ध्यात्वा देवं मुच्यते सर्वपाशैः', 'निचाय्य तं मृत्युमुखात् प्रमुच्यते', "तमेवं विद्वान् अमृत इह भवति" इत्यादि श्रुतिभिः दरीदृश्यते।

जीवः प्रकृतिः परमात्मा चेति तत्त्वत्रयं । परमात्मा सकलकल्याणगुणो-पेतः; हेयप्रतिभटः सर्वनियन्ता, सर्वफलप्रदश्च, सर्वप्राप्यश्च । जीवाः अनन्ताः; नित्याः, मुक्ताः, बद्धाश्चेति त्रिविधाः । बद्धाः संसृतिस्थाः । भगवत्प्रपत्त्या निश्शेषसंसारनिवृत्त्या चरमशरीरवियोगानन्तरं श्रीवैकुण्ठलोकं प्राप्ताः मुक्ताः । नित्याः अनन्तगरुडविष्वक्सेनादयः; नित्यसूरित्वेन

व्यवहृताः; भगवत्समीप एव स्थिताः । प्रकृतिश्च सत्वरजस्तमोगुणसाम्यावस्था । जीवतत्वं प्रकृतितत्वं च परमात्मशरीरं । प्रकृतिः यदा परमात्मेच्छया सृष्टयुन्मुखी भवति तदा मूलप्रकृतिरविकृतिरित्याद्युक्त तत्वान्तरभेदभिन्ना भवति । प्रकृतिजीवयोः परमात्मशरीरत्वाभ्युपगमे सुखदुःखादिकं शरीरगतं शरीरिणि परमात्मनि न सम्बध्यते । कर्मकृतशरीरस्यैव तत् । भोगायतनं शरीरमित्यादि परोक्तशरीरलक्षणस्य अव्याप्त्यतिव्याप्त्यसंभवादि दोषदुष्टत्वेन यस्य चेतनस्य यद्द्रव्यं नियमेन धार्यं शेषभूतं तत्तस्य शरीरमिति लक्षणाश्रयणेन शरीरभूत जीवप्रकृतिनिष्ठसुखदुःखपक्वीकरणादिकं बाल्ययुवत्वादिकं च शरीरिणि परमात्मनि न प्रवर्तते । चित्रपटदृष्टान्ताच्चावगम्यते ।

अत एव

चैतन्यकृति चेतनास्थिरमतिः तत्संवृतिर्मालिका
भूतानि स्वगुणैरहंकृतियुगं शंखेन शार्ङ्गायते ।
बाणाः खानि दशाऽपि कौस्तुभमणिः जीवः प्रधानं पुनः
श्रीवत्सः कमलापते तव गदामाहुर्महान्तं बुधाः ॥

इत्यभियुक्तैः भगवतः जीवतत्वं प्रकृतितत्वं च शरीरत्वेन उपकरणत्वेन च वर्णितम् ।

अनादि जीवकर्मानुसृत्या सृष्ट्यादिकं कृत्वा विहरति भगवान् चक्रवर्तीव । जीवाः स्वाभाविकधर्मभूतज्ञानगुणवन्तः परमात्माधीनाः स्वातन्त्र्याभावेऽपि परमात्मदत्तस्वातन्त्र्याश्रयणेन कर्म कृत्वा तदनुगुणं फलं भगवत्प्रदत्तमनुभवन्ति । विषमसृष्ट्यादिदोषपरिहारश्च ।

"आदावीश्वरदत्तयैव पुरुषः स्वातन्त्र्यशक्त्या स्वयं
तत्तज्ज्ञानचिकीर्षणप्रयत्ननान्युद्भावयन् वर्तते ।
तत्रोपेक्ष्य ततोऽनुमत्य विदधन्निग्रहानुग्रहौ
तत्तत्कर्मफलं प्रयच्छति पुनः सर्वस्य पुंसो हरिः ॥"

" दुष्कर्मस्वनिवर्तनानुमनने पुंसः करोत्यच्युतः
स्वातन्त्र्येण निरंकुशेन सगुणश्रुत्या न दोषो हरेः ।
दृष्टश्चारिषु निग्रहो गुणतया लोके न दोषात्मना
न स्याद्राश्रयसिद्धिरौपनिषदं नोचेत् प्रमाणं वचः ॥ "

" दुष्कर्मव्यवसायतस्तु विरतो यस्तस्य पुंसः पुरा
भूयो जन्मसमार्जितान्यगणितान्यागांस्यनादृत्य यत् ।
तस्यानन्तसुखाप्तये च यतते लक्ष्मीसहायस्त्वयम्
तत्कारुण्यपुरस्सरो गुणगणस्तस्यामुमुज्जृम्भते ॥ "

इति श्लोकत्रयेण ह्यभियुक्तैरुक्ताः ॥

जीवाः ज्ञानस्वरूपा अपि धर्मभूतज्ञानगुणकाश्च कर्मणा धर्मभूतज्ञान-संकोचविकासभाववन्तश्च वर्तन्ते । "मुमुक्षुर्वै शरणमहं प्रपद्ये" इति श्रुत्या "तस्य च वशीकरणं तच्छरणागतिरेवे"ति भाष्याच्च भगवत्प्राप्तिनिदान-भूत प्रपत्तिरूपोपायवन्तश्च । प्रपत्तिश्च ज्ञानविकास विशेष इति " तमेवं विद्वा-नमृत इह भवति; नान्यः पन्था अयनाय विद्यते ' इति श्रुतेरपि न विरोधः । एतादृश परमात्मैव ब्रह्मशब्दवाच्यः । तादृश परब्रह्मैव ' अथातो ब्रह्मजिज्ञासा ' इत्यादिना विचार्यते इति मतप्रक्रियासंग्रहः । एषो ऽर्थश्च

' श्रीमद्रामानुजमुनिमते श्रीनिवासाभिधानं
तत्त्वं नारायण इति जगौ साधनं तत्प्रपत्तिः ।
वैकुण्ठाख्ये परमनिलये दासकर्मैव मोक्षः
जीवा भूत्यकृतिरुदिता विष्णुमूर्तिश्च सत्या ॥ "

इति श्रीविष्णुगराधीशस्तवे अस्माभिरुक्तः । (श्लोकः ९८)

अतः पूर्वोक्त सकलश्रुत्यर्थविशिष्टः नारायण एव ' बृहत्वात् ब्रह्मत्वाच्च ब्रह्मेति परिपठ्यते ' इति श्रुत्या संग्रहेण निर्दिश्यत इति तादृश ब्रह्मविषय जिज्ञासा कर्तव्येति प्रतीयते ।

